गते सा नीली देवाग्रे संगृहीत्वा कायोत्सर्गेण स्थिता दोषोत्तारे भोजनादौ प्रवृत्तिर्मम नान्यथेति । तत्र क्षुभितनगरदेवतया आगत्य रात्रौ सा भणिता- हे महासति ! मा प्राणत्यागमेवं कुरु अहं राज्ञः प्रधानानां पुरजनस्य स्वप्नं ददामि । यथा नगरप्रतोल्यः कीलिता महासती वामचरणेन संस्पृष्टा उद्घटिष्यन्तीति ताश्च प्रभाते भवच्चरणं स्पृष्ट्वा एवं ता उद्घटिष्यन्तीति पादेन प्रतोलीस्पर्शं कुर्यास्त्वमिति भणित्वा राजादीनां तथा स्वप्नं दर्शयित्वा पत्तनप्रतोलीः कीलित्वा स्थिता सा नगरदेवता प्रभाते कीलिता प्रतोलीर्दृष्ट्वा राजादिभिस्तं स्वप्नं स्मृत्वा नगरस्त्रीचरणताडनं प्रतोलीनां कारितं । न चैकापि प्रतोली कयाचिदप्युद्घटिता । सर्वासां पश्चान्नीली तत्रोत्क्षिप्य नीता । तच्चरणस्पर्शात् सर्वा अप्युद्घटिता प्रतोल्यः, निर्दोषा राजादिपूजिता नीली जाता चतुर्थाणुव्रतस्य ।

परिग्रहविरत्यणुव्रताज्जयः पूजातिशयं प्राप्तः ।

जयस्य कथा

कुरुजाङ्गलदेशे [1]हस्तिनागपुरे कुरुवंशे राजा सोमप्रभ पुत्रो जय परिमितपरिग्रहो भार्यासुलोचनायामेव प्रवृत्तिः । एकदा पूर्वविद्याधरभवकथनानन्तरं समायातपूर्वजन्मविद्यो हिरण्यवर्मप्रभावती विद्याधररूपमादाय च मेर्वादौ वन्दनाभक्तिं कृत्वा कैलासगिरौ भरतप्रतिष्ठापितचतुर्विंशतिजिनालयान् वन्दितुमायातौ सुलोचनाजयौ । तत्प्रस्तावे च सौधर्मेन्द्रेण जयस्य स्वर्गे परिग्रहपरिमाणव्रतप्रशंसा कृता । तं परीक्षितुं रतिप्रभदेवः समायात । ततः स्त्रीरूपमादाय चतसृभि विलासिनीभि सह जयसमीपं गत्वा भणितो जयः । सुलोचनास्वयंवरे येन त्वया सह संग्राम कृतः तस्य नमिविद्याधरपते राज्ञीं सुरूपामभिनवयौवनां सर्वविद्याधारिणीं

१ कम्पना ग घ । २ वर्ण पद. घ ।

तन्निरक्तचित्तामिच्छ यदि तस्य

कर्म्म जयेनोक्त हे सुन्दरि ! मैवं ब्रूहि पत्नी

ततस्तया जयस्योपसर्गे महति कृतेऽपि चित्त

मुपसंहृत्य पूर्ववृत्तं कथयित्वा प्रशस्य वस्त्रादिभिः

इति पंचाणुव्रतस्य ॥ १८ ॥

एवं पंचानामहिंसादिव्रतानां प्रत्येकं गुणं

तानां हिंसाद्युपेतानां दोषं दर्शयन्नाह;—

धनश्रीसत्यघोषौ च तापसारक्षकावपि ।
उपाख्येयास्तथा श्मश्रुनवनीतो यथाक्रमम् ॥

धनश्री श्रेष्ठिनी हिंसातो बहुप्रकारं दुःखफलमनुभूतं ।
हितेनानृतात् । तापसेन चौर्यात् । आरक्षकेन कोट्टपालेन
भावात् । ततोऽव्रतप्रभवदु खानुभवने उपाख्येया दृष्टान्तत्वेन
के ते । धनश्रीसत्यघोषौ च । न केवलं एता एव किन्तु
कावपि । तथा तेनैव प्रसिद्धप्रकारेण श्मश्रुनवनीतो वणिक्,
परिग्रहनिवृत्यभावतो बहुतरदु खमनुभूतं । यथाक्रमे
हिंसादिविरत्यभावे एते उपाख्येयाः प्रतिपाद्याः । तत्र धनश्री
बहुदु खं प्राप्ता

अस्या कथा।

लाटदेशे भृगुकच्छपत्तने राजा लोकपाल ।
धनश्री मनागपि जीववधेऽविरता । तत्पुत्री
गुणपाल । अत्र काले धनश्रिया य.
कुण्डलो नाम बालक पोषित , धनपाले मृते तेन सह धनश्री
रता जाता । गुणपले च गुणदोषपरिज्ञानके जाते धनश्रिया
तया भणित प्रसरे गोधनं चारयितुमटव्या गुणपालं प्रेषयामि

तत्र मारय येनानयोर्निरङ्कुशमस्थाने भवतीति सुभाषां मत्सरमाकर्ण्य सुन्दर्या गुणपालस्य कथितं—अद्य रात्रौ गोधनं गृहीत्वा प्रसरे त्वामटव्यां प्रेषयित्वा कुण्डकहस्तेन माता मारयिष्यत्यतः सावधानो भवेस्त्वमिति । धनश्रिया च रात्रिपश्चिमप्रहरे गुणपालो भाणितो हे पुत्र कुण्डकस्य शरीरं विरूपकं वर्तते अत प्रसरे गोधनं गृहीत्वाद्य त्वं व्रजेति । स च गोधनमटव्यां नीत्वा काष्ठं च वस्त्रेण पिधाय तिरोहितो भूत्वा स्थितः । कुण्डकेन चागत्य गुणपालोऽयमिति मत्वा वस्त्रप्रच्छादितकाष्ठे घात कृतो गुणपालेन च स खड्गेन हत्वा मारितः । गृहे आगतो गुणपालो धनश्रिया पृष्टः क रे कुण्डक तेनोक्तं कुण्डकवार्तामियं खड्गोऽभिजानाति । ततो रक्तलिप्तं खड्गमालोक्य स तेनैव खड्गेन मारितः । तं च मारयन्तीं धनश्रियं दृष्ट्वा सुन्दर्या मुसलेन सा हता । कोलाहले जाते कोट्टपालैर्धनश्री धृत्वा राज्ञोऽग्रेनीता । राज्ञा च गर्दभारोहणे कर्णनासिकाच्छेदनादिनिग्रहे कारिते मृत्वा दुर्गतिं गतेति प्रथमाणुव्रतस्य ।

सत्यघोषोऽनृताद्दुःखं प्राप्त ।

### सत्यस्य कथा ।

जम्बूद्वीपे भरतक्षेत्रे सिंहपुरे राजा सिंहसेनो राज्ञी रामदत्ता, पुरोहितः श्रीभूतिः स ब्रह्मसूत्रे कर्त्तिकां बद्ध्वा भ्रमति । वदति च यद्यसत्यं ब्रवीमि तदाऽनया कर्त्तिकया निजजिह्वाच्छेदं करोति ( मि )। एवं कपटेन वर्तमानस्य तस्य सत्यघोष इति द्वितीयं नाम संजातं । लोकाश्च विश्वस्तास्तत्पार्श्वे द्रव्यं धरन्ति च । तद्द्रव्यं किञ्चित्तेषां समर्प्य स्वयं गृह्णाति । पूत्कर्तुं च बिभेति लोकः । न च पूत्कृतं राजा शृणोति । अथैकदा पद्मखण्डपुरादागत्य समुद्रदत्तो वणिक्पुत्रस्तत्र सत्यघोषपार्श्वेऽनर्घ्याणि पञ्च माणिक्यानि धृत्वा परतीरे द्रव्यमुपार्जयितुं गतः । तत्र च तदुपार्ज्य व्याघुटितः स्फुटितप्रवहण

माणिक्यानि याचितुं प्रेषितसि तद्ब्राह्मण्यमे भणित्वा तानि याचयित्वा च शीघ्रमागच्छेति । ततस्तया गत्वा याचितानि । तद्ब्राह्मण्या च पूर्वं मुक्तां निषद्धया न दत्तानि । तद्विलासिन्या चागत्य देविकर्णे कथितं सा न ददातीति । ततो जितमुद्रिकां तस्य सामिज्ञानं दत्त्वा पुनः प्रेषिता तथापि तया न दत्तानि । ततस्तस्य कर्णिकां यज्ञोपवीतं चिह्नं सामिज्ञानं दत्त्वं दर्शितं च । तया ब्राह्मण्या तद्दर्शनाद्भयाद्भीतया च तया समर्पितानि माणिक्यानि तद्विलासिन्या । तया च रामदत्तायाः समर्पितानि । तया च राज्ञो दर्शितानि । तेन च बहुमाणिक्यमध्ये निक्षेप्याकार्य च भद्रिक्रे भणितं रे निजमाणिक्यानि परिज्ञाय गृहाण । तेन च तथैव गृहीतेषु तेषु राज्ञा रामदत्तया च पुत्रः प्रतिपन्नः । ततो राज्ञा सत्यघोषः पृष्टः—इदं कर्म त्वया कृतमिति । तमाह देव ! न करोमि किं ममेदृशं कर्तुं युज्यते ? । ततोऽतिरुष्टेन तेन राज्ञा तस्य दण्डत्रयं कृतं । गोमयमूत्रं भाजनत्रयं भक्षय, मल्लमुष्टिघातं वा सहस्व, द्रव्यं वा सर्वं देहि । तेन च पर्यालोच्य गोमयं खादितुमारब्धं । तदशक्तेन मुष्टिघातं सहितुमारब्धं । तदशक्तेन द्रव्यं दातुमारब्धं । तदशक्तेन गोमयभक्षणं पुनर्मुष्टिघात इति । एवं दण्डत्रयमनुभूय मृत्वातिलोभवशाद्राजकीयभाण्डागारे अगन्धनसर्पो जातः । ततोऽपि मृत्वा दीर्घसंसारी जात इति द्वितीयव्रतस्य ।

तापसश्चौर्याद्दुःखं संप्राप्त ।

**इत्यस्य कथा ।**

वत्सदेशे कौशाम्बीपुरी राजा सिंहरथो राज्ञी विजया । तत्रैकश्चौरः कौटिल्येन तापसो भूत्वा परभूमिमस्पृशन्नवलम्बमानशिक्यस्थो दिवसे पञ्चाग्निसाधनं करोति । रात्रौ च कौशाम्बीं मुषित्वा तिष्ठति । एकदा महाजनान्मुष्टे नगरमाकर्ण्य राज्ञा कोट्टपालो भणितो रे

— प्रभाते बध्वा सर्वेऽपि गच्छन्तु । पुत्र हा हा तात ! पितामहस्य किं पतत् संभाष्यते ! तेनोक्तं—“ बुभुक्षितः किं न करोति पापं ” इति । प्रभाते तस्य पुनर्वचनात् तन्मुखं बद्ध्वा गता । स च बद्धो गतेषु चरणाभ्यां मुखबन्धनं दूरीकृत्वा तद्गतान् भक्षयित्वा तेषामागमन-समये पुनः चरणाभ्यां बन्धनं मुखे संयोज्यातिकुर्कुटेन क्षीणोदरो मृत्वा स्थित ( ३ ) । तता नगरगतेन चतुर्थमतिकुर्कुटं दृष्टं मया यथा तत्र नगरे एकश्चौरस्तापसस्वरूपं धृत्वा मृदभिक्षां च मस्तकस्योपरि हस्ताभ्यामूर्ध्वं गृहीत्वा नगरमध्ये दिवा रात्रौ चातिकुर्कुटेनापसरपादं स्वामीति भणन् भ्रमति । ‘अपसरजीवेति’ चासौ मत्सर्वजनैर्भण्यते । स च गर्तादिविजनस्थाने दिगवलोकनं कृत्वा सुवर्णभूषितमेकाकिनं सम्मन्तं तया शिलया मारयित्वा तद्धनं गृह्णाति ( ४ ) । इत्यतिकुर्कु-टचतुष्टयमवलोक्य मया श्लोकोऽयं कृतः—

अबालस्पर्शका नारी ब्राह्मणस्तृणहिंसकः ।
वने काष्ठमुखः पक्षी पुरेऽपसरजीवकः ॥ इति

इति कथयित्वा तत्कारं चीरयित्वा सम्यगात्मा ब्राह्मणः शिक्षकतपस्विसमीपं गत्वा तपस्विप्रतिचारकैर्निर्भर्त्स्यमानोऽपि राज्यान्धो भूत्वा तत्र पतितैकदेशे स्थितः । ते च प्रतिचारकाः राज्यान्यपरीक्षार्थं तृणकण्टकधूल्यादिकं तस्याक्षिसमीपं नयन्ति । स च पश्यन्नपि न पश्यति । मध्यरात्रौ गुहा-याम्यकूपे नगरमध्ये प्रियमाणमवलोक्य तेषां स्नानपानादिकमवलोक्य प्रभाते राज्ञा मार्यमाणस्तच्छरीररक्षितः तेन रात्रिचरमवेषः शिक्षकतपस्वी चौरस्तेन तत्कारेण बहुकदर्थनादिभिः कदर्थ्यमानो मृत्वा दुर्गतिं गतस्तथा यमतस्य ।

अपरक्षिणाऽशनिहरणभावादुभयं प्राप्तम् ।

अस्य कथा ।

आहीरदेशे[1] नासिक्यनगरे राजा
यमदण्डस्तस्य माता बहुसुन्दरी तरुणरण्डा पुंश्चली
समर्पिताभरणं गृहीत्वा रात्रौ संकेतितजारपार्श्वे गच्छन्ती
सेविता चैकान्ते । तदाभरणं चानीय तेन .
भणितं—मदीयमिदमाभरणं, मया-श्वश्रूहस्ते धृतं ।
चिन्तितं या मया सेविता सा मे जननी भविष्यति । ततस्तत्र
गत्वा तां सेवित्वा तस्यामासक्तो गूढवृत्त्या तया सह
तद्भार्यया असहनादिति रुष्टया रजक्या कथितं । मम भर्ता
तिष्ठति । रजक्या च मालकारिण्याः कथितं । अतिविश्वस्ता
च कनकमाला राज्ञीनिमित्तं पुष्पाणि गृहीत्वा गता । तया
कुतूहलेन, जानासि हे कामप्यपूर्वां वार्तां । तया
राज्य देवि ? यमदण्डतलारो निजजनन्या सह तिष्ठति ।
च राज्ञः कथितं । राज्ञा गूढपुरुषद्वारेण तस्य कुकर्म निश्चित्य
गृहीतो दुर्गतिं गत. चतुर्थव्रतस्य ।

परिग्रहनिवृत्त्यभावात् श्मश्रुनवनीतेन बहुतरं दुःखं प्राप्तं ।

अस्य कथा ।

अस्त्ययोध्यायां श्रेष्ठी भवदत्तो भार्या धनदत्ता पुत्रो
वाणिज्येन दूरं गत । तत्र स्वमुपार्जितं तस्य चौरैर्नीतं ।
तेन मार्गे आगच्छता तत्रैकदा गोदुह[2]. तक्रं पातुं
तक्रे पीते स्तोकं नवनीतं कूर्चेलग्नमालोक्य गृहीत्वा चिन्तितं तेन
बहु भविष्यत्यनेन मे, एवं च तत्संचितं तत् स्वस्य श्मश्रुनवनीत
नाम जातं । एवमेकदा प्रस्थप्रमाणे घृते जाते घृतस्य भाजनं

१ अहीरदेशे ख, ग । २ गोकुले ख. ग घ ।

कृत्वा शीतकाले तृणकुटीरकद्वारे अग्निं च पादान्ते कृत्वा रात्रौ संस्तरे पतितः संचिन्तयति अनेन घृतेन बहुतरमर्थमुपार्ज्य सार्थवाहो भूत्वा सामन्तमहासामन्तराजाधिराजपदं प्राप्य क्रमेण सकलचक्रवर्ती भविष्यामि यदा तदा च मे सप्ततलप्रासादे शय्यागतस्य पादान्ते समुपविष्टं स्त्रीरत्नं पादौ मुष्ट्या मर्दयिष्यति न जानासि पादमर्दनं कर्तुमिति स्नेहेन भणित्वा स्त्रीरत्नमेवं पादेन ताडयिष्यामि एवं चिन्तयित्वा तेन चक्रवर्ति-रूपाविष्टेन पादेन हत्वा पातितं तद्घृतभाजनं तेन च घृतेन द्वारसंधुक्षि-तोऽग्निः सुतरां प्रज्वलितः। ततो द्वारे ज्वलिते निःसर्तुमशक्तो दग्धो मृतो दुर्गतिं गतः। इच्छाप्रमाणरहितपञ्चमव्रतस्य ॥ १८ ॥

यानि चेमानि पंचाणुव्रतान्युक्तानि मद्यादित्रयत्यागसमन्वितान्यष्टौ मूलगुणा भवन्तीत्याह —

मद्यमांसमधुत्यागैः सहाणुव्रतपञ्चकम्।
अष्टौ मूलगुणानाहुर्गृहिणां श्रमणोत्तमाः ॥ २ ॥

गृहिणामष्टौ मूलगुणानाहुः। के ते? श्रमणोत्तमा जिनाः। किं तत्? अणुव्रतपंचकं। कैः सह? 'मद्यमांसमधुत्यागैः' मद्यं च मांसं च मधु च तेषां त्यागास्तैः ॥ २० ॥

एवं पंचप्रकारमणुव्रतं प्रतिपाद्येदानीं त्रिप्रकारं गुणव्रतं प्रतिपादयन्नाह —

दिग्व्रतमनर्थदण्डव्रतं च भोगोपभोगपरिमाणम्।
अनुबृंहणाद्गुणानामाख्यान्ति गुणव्रतान्यार्याः ॥ २१

"आख्यान्ति" प्रतिपादयन्ति। कानि? "गुणव्रतानि"। के ते? "आर्याः" गुणैर्गुणवद्भिर्वा अर्यन्ते प्राप्यन्त इत्यार्यास्तीर्थंकरदेवादयः। किं तद्व्रतं? "दिग्व्रतं" दिग्विरतिः। न केवलमेतदेव किन्तु "अनर्थद

१ कृष्ण. ग.।

ष्व्रतं" चानर्थदण्डविरतिं । तथा

इति भोगोऽशनयानगन्धमाल्यादिः पुनः

भरणयानजंपानादिस्तयोः परिमाणं

त्रीणि कस्माद्गुणव्रतान्युच्यन्ते "अनुबृंहणात्"

"गुणानाम्, अष्टमूलगुणानाम्" ॥ २१ ॥

तत्र दिग्व्रतस्वरूपं प्ररूपयन्नाह;—

**दिग्वलयं परिगणितं कृत्वातोऽहं बहिर्न**

**इति सङ्कल्पो**

'दिग्व्रत' भवति । कोऽसौ ? 'संकल्पः' । कथंभूतः

यास्यामी'त्येव रूप । किं कृत्वा ? 'दिग्वलयं परिगणितं

यदि कृत्वा । कथं ? 'आमृति' मरणपर्यन्तं यावत् ।

पविनिवृत्त्यै' सूक्ष्मस्यापि पापस्य विनिवृत्त्यर्थम् ॥ २२ ॥

तत्र दिग्वलयस्य परिगणितत्वे कानि मर्यादा इत्याह.

**मकराकरसरिदटवीगिरिजनपदयोजनानि**

**प्राहुर्दिशां दशानां प्रतिसंहारे प्रसिद्धानि ॥ २३ ॥**

प्राहुर्मर्यादा । कानीत्याह—'मकराकरे'त्यादि मकराकर

सरितश्च नद्यो गंगाद्या, अटवी दंडकारण्यादिका,

। , जनपदो देशो वराट वापीतटादि', योजनानि

नि । किं विशिष्टान्येतानि ? प्रसिद्धानि

प्रसिद्धानि । कासां मर्यादाः ? दिशां ।

दशानां । कस्मिन् कर्तव्ये सति मर्यादाः ? प्रतिसंहारे

न यास्यामीति व्यावृत्तौ ॥ २३ ॥

एवं दिग्विरतिव्रतं धारयतां मर्यादातः परतः किं

१ स्त्रीजनोपसेवनादि वा. । २

अवधेर्बहिरणुपापप्रतिविरतेर्दिग्व्रतानि धारयताम्।
पञ्चमहाव्रतपरिणतिमणुव्रतानि प्रपद्यन्ते ॥ २४ ॥

अणुव्रतानि प्रपद्यन्ते। कां? पंचमहाव्रतपरिणतिं। केषां? धारयतां। कानि? दिग्व्रतानि। कुतस्तत्परिणतिं प्रपद्यन्ते? अणुपापं प्रति विरते सूक्ष्ममपि पापं प्रति विरते व्यावृत्ते। क्व? बहिः। कस्मात्? अवधेः कृतमर्यादायाः ॥ २४ ॥

तथा तेषां तत्परिणतावपरमपि हेतुमाह —

प्रत्याख्यानतनुत्वान्मन्दतराश्चरणमोहपरिणामाः।
सत्त्वेन दुरवधारा महाव्रताय प्रकल्प्यन्ते ॥ २५ ॥

'चरणमोहपरिणामाः' भावरूपाश्चारित्रमोहपरिणतयः। 'कल्प्यन्ते' उपचर्यन्ते। किमर्थं? महाव्रतनिमित्तं। कथंभूताः सन्तः? 'सत्त्वेन' 'दुरवधाराः' अस्तित्वेन महता कष्टेनावधार्यमाणाः सन्तोऽपि तेऽस्तित्वेन लक्षयितुं न शक्यन्त इत्यर्थः। कुतस्ते दुरवधाराः? 'मन्दतराः' अतिशयेनानुत्कटाः। मन्दतरत्वमप्येषां कुतः? 'प्रत्याख्यानतनुत्वात्' प्रत्याख्यानशब्देन प्रत्याख्यानावरणाः द्रव्यक्रोधमानमायालोभा गृह्यन्ते नामैकदेशे हि प्रवृत्ताः शब्दा नाम्न्यपि वर्तन्ते भीमवत्। प्रत्याख्यानं हिंसाविरत्येन हिंसादिविरतिलक्षणं संयममावृण्वन्ति ये ते प्रत्याख्यानावरणा द्रव्यक्रोधादयः यदुदये ह्यात्मा कार्त्स्न्याद्विरतिं कर्तुं न शक्नोति अतो द्रव्यरूपाणां क्रोधादीनां तनुत्वान्मन्दोदयत्वाद्भावरूपाणां मन्दतरत्वं सिद्धं।

ननु कुतस्ते महाव्रताय कल्प्यन्ते तत् साक्षान्महाव्रतरूपा भवन्तीत्याह —

पञ्चानां पापानां हिंसादीनां मनोवचःकायैः।
कृतकारितानुमोदैस्त्यागस्तु महाव्रतं महताम् ॥ २६ ॥

"त्यागस्तु"[१] पुनर्महाव्रतं

नां" । कथंभूतानां "पापानां"

"मनोवच कायैः । तैरपि कैः कृत्स्न त्यागः

मर्थ·—हिंसादीनां मनसा

कायेन चेति । केषां तेस्त्यागो महाव्रतं

र्तिनां विशिष्टस्मनाम् ॥ २६ ॥

इदानीं दिग्विरतिव्रतस्यातिचारानाह—

उर्ध्वाधस्तात्तिर्यग्व्यतिपाताः

विस्मरणं दिग्विरतेरत्याशाः

"दिग्विरतेरत्याशा" अतीचारा. "पंच

हि । अज्ञानात् प्रमादाद्वा

विशेषेणातिक्रमणनि त्रय । तथाऽज्ञानात् प्रमादाद्वा

क्यावधारण । तथाऽ'वधीनां' दिग्विरतेः

मिति ॥ २७ ॥

इदानीमनर्थदण्डद्वितीयं विरतिलक्षणं गुणव्रतं

अभ्यन्तरं दिगवधेरपार्थिकेभ्यः

विरमणमनर्थदण्डव्रतं विदुर्व्रतधराग्रण्यः ॥ २

'अनर्थदण्डव्रतं विदु'र्जानन्ति । के ते ?

यतीना मध्येऽग्रण्य प्रधानभूतास्तीर्थंकरदेवादयः । 'विरमणं'

केभ्य ? 'सपापयोगेभ्य' पापेन सह योगः सम्बन्धः

सह वर्तमानेभ्य पापोपदेशाद्यनर्थदण्डेभ्य किं विशिष्टेभ्यः

केभ्य' निष्प्रयोजनेभ्यः । कथं तेभ्यो विरमणं ? 'अभ्यन्तरं'

दिगवधेरभ्यन्तर यथा भवत्येवं तेभ्यो विरमणं । अतएव

१ इदानीं द्वितीयमनर्थदण्डव्रत इति ख

मेव । तद्व्रते हि मर्यादातो बहिः पापोपदेशादिविरमणं अनर्थदण्डविरतिव्रते तु ततोऽभ्यन्तरे तद्विरमणं अथ के ते अनर्थ दण्डा यतो विरमणं स्यादित्याह

पापोपदेशहिंसादानापध्यानदुःश्रुतीः पञ्च ।
प्राहुः प्रमादचर्यामनर्थदण्डानदण्डधराः ॥ २९ ॥

दण्डा इव दण्डा अशुभमनोवाक्कायाः परपीडाकरत्वात्, तान् धरन्ती त्येवंशीला गणधरदेवादयस्ते प्राहुः । कान् ? अनर्थदण्डान् । कति ? पंच । कथमित्याह पापेत्यादि । पापोपदेशश्च हिंसादानं च अपध्यानं च दुःश्रुतिश्च एताश्चतस्रः प्रमादचर्या चेति पंचमी ॥ २९ ॥

तत्र पापोपदेशस्य तावत् स्वरूपं प्ररूपयन्नाह —

तिर्यक्क्लेशवणिज्याहिंसारम्भप्रलम्भनादीनाम् ।
कथाप्रसङ्गप्रसवः स्मर्तव्य[1] पाप उपदेशः ॥ ३० ॥

स्मर्तव्यो ज्ञातव्यः । कः ? पापोपदेशः पापः पापोपार्जनहेतुरुपदेशः कथंभूतः ? कथाप्रसंगः कथानां तिर्यक्क्लेशादिवार्तानां प्रसंगः पुनः पुनः प्रवृत्तिः । किं विशिष्टः ? प्रसवः प्रसूत इति प्रसवः उत्पादकः । केषामित्याह—तिर्यगित्यादि तिर्यक्क्लेशश्च हस्तिदमनादिः, वाणिज्या च वणिजां कर्म क्रयविक्रयादि, हिंसा च प्राणिवधः, आरंभश्च कृष्यादिः,

---

१ अनर्थदण्डः पंचधा अपध्यानपापोपदेशप्रमादाचरितहिंसाप्रदानाशुभश्रुतिभेदात् ॥ तिर्यक्क्लेशवणिज्याप्राणिवधकारम्भादिषु पापसंयुक्तं वचनं पापोपदेशः ॥ तद्यथा—अस्मिन् देशे दासा दास्यः सुलभास्तानमुं देशं नीत्वा विक्रये कृते महान् अर्थलाभो भवतीति क्लेशवणिज्या । गोमहिष्यादीनमुत्र गृहीत्वा अन्यत्र देशे व्यवहारे कृते भूरिवित्तलाभ इति तिर्यग्वणिज्या । वागुरिकसौकरिकशाकुनिकादिभ्यो मृग-वराह-शकुन्तप्रभृतयोऽमुष्मिन् देशे सन्तीति वचनं वधकोपदेशः । आरम्भकेभ्यः कृषीवलादिभ्यः क्षित्युदकज्वलनपवनवनस्पत्यारम्भोऽनेनोपायेन कर्तव्य इत्याख्यानमारम्भकोपदेशः । एवंप्रकारं पापसंयुक्तं वचनं पापोपदेशः ।

प्रलम्भनं च वंचनं तानि आदिर्येषां
तेषाम् ॥ ३० ॥

अथ हिंसादाने किमित्याह;—

**वधहेतूनां दानं हिंसादानं ब्रुवन्ति**

'हिंसादानं ब्रुवन्ति'। के ते ? 'बुधा'
'दानं'। यत्केषां ? 'वधहेतूनां' हिंसाकारणानां।
त्याह—'परशि'त्यादि। परशुश्च कृपाणश्च खनित्रं
च क्षुरिकालकुटादीनि शृंगि च विष सामान्यं
येषा ते तथोक्तास्तेषाम् ॥ ३१ ॥

इदानीमपध्यानस्वरूपं व्याख्यातुमाह;—

**वधबन्धच्छेदादेर्द्वेषाद्रागाच्च परकलत्रादेः**
**आध्यानमपध्यानं शासति जिनशासने**

'अपध्यानं शासति' प्रतिपादयन्ति। के ते ? 'विशदाः'
क ? 'जिनशासने'। किं तत् ? 'आध्यानं' चिन्तनं। कस्य
धच्छेदादे,। कस्मात् ? 'द्वेषात्'। न केवलं द्वेषादपि
कस्य ? 'परकलत्रादे' ॥ ३२ ॥

साम्प्रतं दु श्रुतिस्वरूपं प्ररूपयन्नाह;—

**आरम्भसङ्गसाहसमिथ्यात्वद्वेषरागमदमदनैः**
**चेतःकलुषयतां श्रुतिरवधीनां दुःश्रुतिर्भवति**

'शुद्धिर्भवति' । कस्मै 'श्रुति श्रवणं । केषां 'आवधीनां' शास्त्राणां किं कुर्वतां 'कलुषयतां' मलिनयतां । किं तत् 'चेतः' क्रोधमानमायालोभाभिर्हि चित्तं कुर्वतामित्यर्थः । के इत्याह—'आरंभेत्यादि' आरंभस्य कृष्यादिः संगश्च परिग्रहः तयोः प्रतिपादनं वार्त्ता नीतौ विधीयते "कृषिः पशुपाल्यं वाणिज्यं च वार्त्ता" इत्यभिधानात्, साहसं चात्यद्भुतं कर्म भीरुकथायां प्रतिपाद्यते, मिथ्यात्वं चाद्वैतक्षणिकमित्यादिप्रमाणविरुद्धार्थप्रतिपादकशास्त्रेण क्रियते द्वेषश्च विद्वेषीकरणादिशास्त्रेणाभिधीयते-रागश्च वशीकरणादिशास्त्रेण विधीयते, मदश्च वर्णाना ब्राह्मणो गुरुरित्यादिस्मृत्याख्यायते, मदनश्च रतिगुणविलासपताकादिशास्त्रादुत्कटो भवति तैः एवंभूता चेतः कलुषयतां शास्त्राणां श्रुतिर्दुःश्रुति र्भवति ॥ ३३ ॥

अधुना प्रमादचर्यास्वरूपं निरूपयन्नाह;—

क्षितिसलिलदहनपवनारम्भं विफलं वनस्पतिच्छेदं ।
सरणं सारणमपि च प्रमादचर्यां प्रभाषन्ते ॥ ३४ ॥

'प्रभाषन्ते' प्रतिपादयन्ति । कां ? 'प्रमादचर्यां' । किं तदित्याह 'क्षितीत्यादि' । क्षितिश्च सलिलं च दहनश्च तेषामारंभं क्षितिखननसलिलप्रक्षेपण-दहनप्रज्वालन-पवनकरणलक्षणं । किं विशिष्टं ? 'विफलं' निष्प्रयोजनं । तथा वनस्पतिच्छेदं' विफलं । न केवलमेतदेव किन्तु, 'सरणं' 'सारणमपि च' सरणं स्वयं निष्प्रयोजनं पर्यटनं सारणमन्यं निष्प्रयोजनं गमनप्रेरणं ॥ ३४ ॥

एवमनर्थदण्डविरतिव्रतं प्रतिपाद्येदानीं तस्यातीचारानाह,—

कन्दर्पं कौत्कुच्यं मौखर्यमतिप्रसाधनं पञ्च ।
असमीक्ष्य चाधिकरणं व्यतीतयोऽनर्थदण्डकृद्विरतेः ॥ ३५ ॥

१ प्रयोजनमन्तरेणापि वृक्षादिच्छेदन—भूमिकुट्टन—जलसेचनाद्यवद्यकर्म प्रमाद चरितमिति कथ्यते ॥

म्यतीत्यो ऽतीचारा भवन्ति । ...
निष्प्रयोजनं दण्डं दोषं कुर्वन्निरस्यन्नर्थदण्डः ...
र्थस्य तस्य । कति ? पंच ।
भण्डिमाप्रधानो वचनप्रयोगः कंदर्पः, प्रचुरो ...
तत्कायव्यापारप्रयुक्तं कौत्कुच्यं, धाष्टर्यप्रायं
तार्थेनोपभोगोपरिभोगो भवतस्ततोऽधिकत्व
चत्वारि, असमीक्ष्याधिकरणं पंचमं असमीक्ष्य
क्येन कार्यस्य करणमसमीक्ष्याधिकरणं ॥ ३५ ॥

साम्प्रतं भोगोपभोगपरिमाणलक्षणं

अक्षार्थानां परिसंख्यानं
अर्थवतामप्यवधौ रागरतीनां तनूकृतये ॥ ३६

'भोगोपभोगपरिमाणं' भवति । किं तत् ? 'यत्परिसंख्यानं'
केषां ? 'अक्षार्थानां'मिन्द्रियविषयाणां । कथंभूतानामपि तेषां
तामपि' सुखादिलक्षणप्रयोजनसंपादकानामपि अथवाऽर्थवतां
मपि श्रावकाणां । तेषां परिसंख्यानं किमर्थं ? 'तनूकृतये'
णार्थं । कासां ? 'रागरतीनां' रागेण विषयेषु रागोद्रेकेण
रत्यस्तासां । कस्मिन् सति ? अवधौ विषयपरिमाणे ॥ ३६ ॥

अथ को भोग कश्चोपभोगो यत्परिमाणं क्रियते

भुक्त्वा परिहातव्यो भोगो भुक्त्वा पुनश्च
उपभोगोऽशनवसनप्रभृतिः पञ्चेन्द्रियो विषयः

१ भोगसंख्यानं पंचविधं
मधुमांसं सदा परिहर्तव्यं त्रसघात प्रति निवृत्तचेतसा । १
कार्यविवेकसंमोहकरमिति तद्वर्जनं प्रमादविरहाय अत्रुडेवं ।

'पञ्चेन्द्रियाणामर्थः' पञ्चेन्द्रियाणां विषयः। 'भुक्त्वा' परिहातव्यः, त्याज्यः स भोगोऽशनपुष्पगन्धविलेपनप्रभृतिः। यः पूर्वं भुक्त्वा पुनश्च भोक्तव्यः स उपभोगो वसनाभरणप्रभृति वसनं वस्त्रम्॥ ३७॥

मद्यादिभोगरूपोऽपि त्रसजन्तुघातहेतुत्वादणुव्रतधारिभिस्त्याज्य इत्याह —

त्रसहतिपरिहरणार्थं क्षौद्रं पिशितं प्रमादपरिहृतये।
मद्यं च वर्जनीयं जिनचरणौ शरणमुपयातैः॥ ३८

वर्जनीयं। किं तत्? 'क्षौद्रं' मधु। तथा 'पिशितं'। किमर्थं? 'त्रसहतिपरिहरणार्थं' त्रसानां द्वीन्द्रियादीनां हतिर्वधस्तत्परिहरणार्थं। तथा 'मद्यं च' वर्जनीयं। किमर्थं? 'प्रमादपरिहृतये' माता भार्येति विवेकाभावः प्रमादस्तस्य परिहृतये परिहारार्थं। कैर्वर्जनीयं? शरणमुपयातैः शरणमुपगतैः। कौ? जिनचरणौ श्रावकैस्तत्त्याज्यमित्यर्थः॥ ३८॥

तथैतदपि तैस्त्याज्यमित्याह,—

अल्पफलबहुविघातान्मूलकमार्द्राणि शृङ्गवेराणि।
नवनीतनिम्बकुसुमं कैतकमित्येवमवहेयम्॥ ३९॥

'अवहेयं' त्याज्यं। किं तत्? 'मूलकं'। तथा 'शृङ्गवेराणि' आर्द्रकाणि। किं विशिष्टानि? 'आर्द्राणि' अपक्वानि। तथा नवनीतनिम्बकुसुममित्युपलक्षणं सकलकुसुमविशेषाणां तेषां कैतकं केतक्या इदं कैतकं गुधरा इत्येवं, इत्यादि सर्वमवहेयं कस्मात्? 'अल्पफलबहुविघातात्'[1] अल्पं फलं यस्यासावल्पफलः बहूनां त्रसजीवानां विघातो विनाशो बहुविघातः अल्पफलश्चासौ बहुविघातश्च तस्मात्॥ ३९॥

प्रासुकमपि यदेवंविधं तत्त्याज्यमित्याह,—

---

१ केतक्यर्जुनपुष्पादीनि बहुजन्तुयोनिस्थानानि शृङ्गवेरमूलकार्द्रनिम्बकुसुमादीनि अनन्तकायव्यपदेशार्हाणि पदेऽप्युपदेशे बहुघातीऽल्पफलमिति तत्परिहारः श्रेयान्।

यदनिष्टं तदव्रतयेद्यच्चानुपसेव्यमेतदपि जह्यात् ।
अभिसन्धिकृता विरतिर्विषयाद्योग्याद्व्रतं भवति ॥४०॥

'यदनिष्टं' उदरशूलादिहेतुतया प्रकृतिसात्म्यकं यन्न भवति 'तद्व्रतयेत्' व्रतं निवृत्तिं कुर्यात् त्यजेदित्यर्थः । न केवलमेतदेव व्रतयेदपितु 'यच्चानुपसेव्यमेतदपि जह्यात्' यच्च यदपि गोमूत्र करभदुग्ध शङ्खचूर्ण ताम्बूलोद्गल लाला-मूत्र-पुरीष-श्लेष्मादिकमनुपसेव्यं प्रासुकमपि शिष्टलोकानास्वादनायोग्य एतदपि जह्यात् व्रतं कुर्यात् । कुत एतदित्याह—अभिसन्धीत्यादि अनिष्टया अनुपसेव्यतया च व्यावृत्तेर्योग्याद्विषयादभिसन्धिकृताऽभिप्रायपूर्विका या विरतिः सा यतो व्रतं भवति ॥ ४० ॥

तच्च द्विधा भिद्यत इति —

नियमो यमश्च विहितौ द्वेधा भोगोपभोगसंहारे ।
नियमः परिमितकालो यावज्जीवं यमो ध्रियते ॥ ४१ ॥

भोगोपभोगसंहारात् भोगोपभोगयोः संहारात् परिमाणात् तमाश्रित्य । द्वेधा विहितौ द्वाभ्यां प्रकाराभ्यां द्वेधा व्यवस्थापितौ । कौ ? नियमो यमश्चेत्येतौ । तत्र को नियमः कश्च यम इत्याह—नियमः परिमितकालो वक्ष्यमाणः परिमितः कालो यस्य भोगोपभोगसंहारस्य स नियमः । यमश्च यावज्जीवं ध्रियते ।

तत्संहारलक्षणनियमं दर्शयन्नाह —

भोजनवाहनशयनस्नानपवित्राङ्गरागकुसुमेषु ।
ताम्बूलवसनभूषणमन्मथसंगीतगीतेषु ॥ ४२ ॥

१ शातवाहनाभरणादिषु एतावदेवेष्टमतोऽन्यदनिष्टमित्यनिष्टान्निवर्तनं कर्तव्यं ।
२ न लसति अभिसन्धिनियमे व्रतमितीष्टानामपि चित्रवस्त्रविकृतवेशाभरणादीनामनुपसेव्यानां परित्यागः कार्यः ।

अद्य दिवा रजनी वा पक्षो मासस्तथर्तुरयनं वा।
इति कालपरिच्छित्त्या प्रत्याख्यानं भवेन्नियमः ॥ ४२ ॥

युगलं। नियमो भवेत्। किंतत्? प्रत्याख्यानं। कया? कालपरिच्छित्त्या। तामेव कालपरिच्छित्तिं दर्शयन्नाह—अद्येत्यादि अद्येति प्रवर्तमानघटिकाप्रहरादिलक्षणकालपरिच्छित्त्या प्रत्याख्यानं। तथा दिवेति। रजनि रात्रिरिति वा। पक्ष इति वा। मास इति वा। ऋतुरिति वा मासद्वयं। अयनमिति वा षण्मासा। इत्येवं कालपरिच्छित्त्या प्रत्याख्यानं। केष्वित्याह—भोजनेत्यादि भोजने च, वाहने च घोटकादि, शयने च पल्यङ्कादि, स्नाने च, पवित्राङ्गरागश्च पवित्रस्नानाङ्गरागश्च कुङ्कुमादिविलेपनं। उपलक्षणमेतदञ्जनतिलकादीनां पवित्रविशेषणादोषापकमनार्थमीषभावाङ्गरागो निरस्तः। कुसुमानि च तेषु विषयभूतेषु। तथा ताम्बूलं च वसनं च भूषणं च कटकादि मन्मथश्च कामसेवा संगीतं च गीतनृत्यवादित्रत्रयं गीतं च केवलं नृत्यवादरहितं तेषु च विषयेषु अद्येत्यादिरूपं कालपरिच्छित्त्या यत्प्रत्याख्यानं स नियम इति व्याख्यातम् ॥ ४२–४२ ॥

भोगोपभोगपरिमाणस्येदानीमतीचारानाह—

विषयविषतोऽनुपेक्षानुस्मृतिरतिलौल्यमतितृषाऽनुभवो। भोगोपभोगपरिमा व्यतिक्रमाः पञ्च कथ्यन्ते ॥ ४४ ॥

भोगोपभोगपरिमाणं तस्य व्यतिक्रमा अतीचाराः पञ्च कथ्यन्ते। के ते इत्याह विषयेत्यादि विषय एव विषं प्राणिनां दाहसंतापादिविधायित्वात् तेषु ततोऽनुपेक्षा उपेक्षाया त्यागस्याभावोऽनुपेक्षा आदर इत्यर्थः। विषयवेदना प्रतिकारार्थो हि विषयानुभवस्तस्मात्प्रतीकारे जातेऽपि पुनर्यत्संभाषणालिंगनाद्यादरः सोऽत्यासक्तिजनकत्वादतीचारः। अनुस्मृ

# शिक्षाव्रताधिकारश्चतुर्थ ।



साम्प्रतं शिक्षाव्रतस्वरूपप्ररूपणार्थमाह —

देशावकाशिकं वा सामायिकं प्रोषधोपवासो वा ।
वैयावृत्यं शिक्षाव्रतानि चत्वारि शिष्टानि ॥ १ ॥

शिष्टानि प्रतिपादितानि । कानि ? शिक्षाव्रतानि । कति ? चत्वारि कस्मात् ? देशावकाशिकमित्यादिचतुःप्रकारसद्भावात् । वाशब्दोऽत्र परस्परप्रकारसमुच्चये । देशावकाशिकादीनां लक्षणं स्वयमेवाग्रे ग्रन्थकारः करिष्यति ॥ १ ॥

तत्र देशावकाशिकस्य लक्षणं —

देशावकाशिकं स्यात्कालपरिच्छेदनेन देशस्य ।
प्रत्यहमणुव्रतानां प्रतिसंहारो विशालस्य ॥ २ ॥

देशावकाशिकं देशे मर्यादीकृतदेशमध्येऽपि स्तोकप्रदेशेऽवकाशो नियतकालमवस्थानं सोऽस्यास्तीति देशावकाशिकं शिक्षाव्रतं स्यात् । कोऽसौ ? प्रतिसंहारो व्यावृत्ति । कस्य ? देशस्य । कथंभूतस्य ? विशालस्य बहो । केन ? कालपरिच्छेदनेन दिवसादिकालमर्यादा । कथं ? प्रत्यहं प्रतिदिनं । केषां ? अणुव्रतानां अणूनि सूक्ष्माणि व्रतानि येषां तेषां श्रावकाणामित्यर्थः ॥ २ ॥

अथ देशावकाशिकस्य का मर्यादा इत्याह —

गृहहारिग्रामाणां क्षेत्रनदीदावयोजनानां च ।
देशावकाशिकस्य स्मरन्ति सीमा तपोवृद्धाः ॥ ३ ॥

तपोवृद्धाश्चिरन्तनाचार्या गणधरदेवादय । सीम्ना स्मरन्ति मर्यादाः प्रतिपाद्यन्ते । सीम्नामित्यत्र " स्मृत्यर्थदयीशा कर्म " इत्यनेन षष्ठी । केषां सीमाभूताना ? गृहहारिग्रामाणा हारि कटक । तथा क्षेत्रनदी दावयोजनाना च दावो वन । कस्यैतेषा सीमाभूताना देशावकाशिकस्य देशनिवृत्तिव्रतस्य ।

एव द्रव्यावधिं योजनावधिं प्रतिपादयन्नाह·—

**संवत्सरमृतुरयनं मासचतुर्मासपक्षमृक्षं च ।**
**देशावकाशिकस्य प्राहुः कालावधिं प्राज्ञाः ॥ ४ ॥**

देशावकाशिकस्य कालावधिं कालमर्याद प्राहु· । प्राज्ञ· गणधरदेवादय· । किं तदित्याह सवत्सरमित्यादि संवत्सर यावदेतावत्येव देशे मयाऽवस्थातव्य । तथा ऋतुरयन वा यावत् । तथा मासचतुर्मासपक्षं यावत् । ऋक्ष च चन्द्रमुक्त्या आदित्यमुक्त्या वा इद नक्षत्र यावत्

एवं देशावकाशिकव्रते कृते सति तत. परत· किं स्यादित्याह.—

**सीमन्तानां परतः स्थूलेतरपञ्चपापसंत्यागात् ।**
**देशावकाशिकेन च महाव्रतानि प्रसाध्यन्ते ॥ ५ ॥**

प्रसाध्यन्ते व्यवस्थाप्यन्ते । कानि ? महाव्रतानि । केन ? देशावकाशिकेन च न केवल दिग्विरत्यापि देशावकाशिकेनापि । कुत· ? स्थूलेतरपचपापसत्यागात् स्थूलेतराणि च तानि हिंसादिलक्षणपचपापानि च तेषा सम्यक् त्याग । क्व ? सीमान्ताना परत. देशावकशिकव्रतस्य सीमाभूता ये 'अन्ताधर्मा'गृहादयः संवत्सरादिविशेषा तेषा वा अन्ताः पर्यन्तास्तेषां परत· यस्मिन् भागे इदानीं तदतिचारान् दर्शयन्नाह·—

**प्रेषणशब्दानयनं रूपाभिव्यक्तिपुद्गलक्षेपौ ।**
**देशावकाशिकस्य व्यपदिश्यन्तेऽत्ययाः पञ्च ॥ ६ ॥**

स्यया मतिचारा । पंच व्यपदिश्यन्ते कथ्यन्ते । के ते इत्याह— प्रेषणेत्यादि मर्यादीकृते देशे स्वयं स्थितस्य ततो बहिरिदं कुर्विति विनियोग प्रेषणं । मर्यादीकृतदेशाद्बहिर्व्यापारं कुर्वतः कर्मकरान् प्रति खात्कारणादि शब्दः । तद्देशाद्बहिः प्रयोजनवशादिदमानयेत्याज्ञापनमानयनं । मर्यादीकृतदेशे स्थितस्य बहिर्देशे कर्म कुर्वतां कर्मकराणां स्वविग्रहप्रदर्शनं रूपाभिव्यक्तिः । तेषामेव लेष्ठादिनिपातः पुद्गलक्षेपः ॥६॥

एवं देशावकाशिकरूपं शिक्षाव्रतं व्याख्यायेदानीं सामायिकरूपं तद्व्याख्यातुमाह,—

आसमयमुक्ति मुक्तं पञ्चाघानामशेषभावेन ।
सर्वत्र च सामयिकाः सामायिकं नाम शंसन्ति ॥ ७ ॥

सामयिकं नाम स्फुटं शंसन्ति प्रतिपादयन्ति । के ते ? सामयिकाः समयमागमं विन्दन्ति ये ते सामयिका गणधरदेवादयः । किं तत् ? मुक्तं मोचनं परिहरणं यत् तत् सामयिकं । केषां मोचनं ? पंचाघानां हिंसादिपंचपापानां । कथं ? आसमयमुक्ति वक्ष्यमाणलक्षणसमयमोचनं आसमन्तात्प्राप्य गृहीतनियमकालमुक्तिं यावदित्यर्थः । कथं तेषां मोचनं ? अशेषभावेन समास्त्येन न पुनर्देशतः । सर्वत्र च सकले परमागमे च अनेन देशावकाशिकाद्‌स्य भेदः प्रतिपादितः ॥ ७ ॥

आसमयमुक्तिमित्र य समयशब्दः प्रतिपादितस्तदर्थं व्याख्यातुमाह,—

मूर्धरुहमुष्टिवासोबन्धं पर्यङ्कबन्धनं चापि ।
स्थानमुपवेशनं वा समयं जानन्ति समयज्ञाः ॥ ८ ॥

समयज्ञा आगमज्ञाः । समयं जानन्ति । किं तत् ? मूर्धरुहमुष्टिवासोबन्धं बन्धशब्दः प्रत्येकमभिसम्बध्यते मूर्धरुहाणां केशानां बन्धं बन्धकालं समयं जानन्ति । तथा मुष्टिबन्धं वासोबन्धं वस्त्रग्रन्थि पर्यङ्कबन्धनं

चापि उपविष्टकायोत्सर्गमपि च स्थानमूर्ध्वकायोत्सर्गं उपवेशन वा सामान्येनोपविष्टावस्थानमपि समय जानन्ति ॥ ८ ॥

एव विवे समये भवत् यत्सामायिक पंचप्रकारपापात् साकल्येन व्यावृत्तिस्वरूप तस्योत्तरोत्तरा वृद्धि कर्तव्येत्याह —

एकान्ते सामयिकं निर्व्याक्षेपे वनेषु वास्तुषु च ।
चैत्यालयेषु वापि च परिचेतव्यं प्रसन्नधिया ॥ ९ ॥

परिचेतव्य वृद्धि नेतव्य । किं तत् ? सामायिक । क्व ? एकान्ते स्त्रीपशुपाण्डुविवर्जिते प्रदेशे । कथभूते ? निर्व्याक्षेपे चित्तव्याकुलतारहिते शीतवातदेशमशकादिवाधावर्जित इत्यर्थ इत्थभूते एकान्ते । क्व ? वनेषु अटवीषु, वास्तुषु च गृहेषु, चैत्यालयेषु च अपिशब्दाद्गिरिगव्हरादिपरिग्रह । केन चेतव्य ? प्रसन्नधिया प्रसन्ना अविक्षिप्ता धीर्यस्यात्मनस्तेन अथवा प्रसन्नासौ धीश्च तया कृत्वा आत्मना परिचेतव्यमिति ॥९॥

इत्थभूतेषु स्थानेषु कथ तत्परिचेतव्यमित्याह —

व्यापारवैमनस्याद्विनिवृत्त्यामन्तरात्मविनिवृत्त्या ॥
सामयिकं बध्नीयादुपावासे चैकभुक्ते वा ॥ १० ॥

बध्नीयादनुतिष्ठेत् । किं तत् ? सामयिक । कस्या ? विनिवृत्त्या । कस्मात् ? व्यापारवैमनस्यात् व्यापार कायादिचेष्टा वैमनस्य मनोव्यग्रता चित्तकालुष्य वा तस्माद्विनिवृत्यामपि सत्या अन्तरात्मविनिवृत्या कृत्वा तद्बध्नीयात् अन्तरात्मनो विकल्पस्य विशेषेण विनिवृत्या । कस्मिन् सति तस्या तद्बध्नीयात् ? उपवासे चैकभुक्ते वा ॥ १० ॥

इत्थ भूत तत्किं कदाचित्परिचेतव्यमन्यथा चेत्यत्राह —

सामयिकं प्रतिदिवसं यथावदप्यनलसेन चेतव्यं ।
व्रतपञ्चकपरिपूरणकारणमवधानयुक्तेन ॥ ११ ॥

चेतव्यं वृद्धिं नेतव्यं। किं? सामायिकं। कदा? प्रतिदिवसमपि न पुनः कदाचित् पर्वदिवसे एव। कथं? यथावदपि प्रतिपादितस्वरूपानतिक्रमेणैव। कथंभूतेन? अनलसेनाऽऽलस्यरहितेन उद्यतेनेत्यर्थः। तथाऽवधानयुक्तेनैकाग्रचेतसा। कुतस्तदित्थं परिचेतव्यं? व्रतपंचकपरिपूरणकारणत्वात्। व्रतानां हि अहिंसादीनां पंचकं तस्य परिपूरणं परिपूर्णत्वं महाव्रतरूपत्वं तस्य कारणं यथोक्तसामायिकानुष्ठानकाले हि अणुव्रतान्यपि महाव्रतत्वं प्रतिपद्यन्तेऽतस्तत्कारणं ॥ ११ ॥

एतदेव समर्थयमानः प्राह—

सामयिके सारम्भाः परिग्रहा नैव सन्ति सर्वेऽपि।
चेलोपसृष्टमुनिरिव गृही तदा याति यतिभावं ॥ १२॥

सामयिके सामायिकावस्थायां। नैव सन्ति न विद्यन्ते। के? परिग्रहाः सङ्गाः। कथंभूताः? सारम्भाः कृष्याद्यारम्भसहिताः। कति? सर्वेऽपि "बाह्याभ्यन्तराश्चेतनेतरादिरूपा" वा। यत एवं ततो याति प्रतिपद्यते। कं? यतिभावं यतित्वं। कोऽसौ? गृही श्रावकः। कदा? सामायिकावस्थायां। कइव? चेलोपसृष्टमुनिरिव चेलेन वस्त्रेण उपसृष्टः उपसर्गवशाद्वेष्टितः स चासौ मुनिश्च स इव तद्वत् ॥ १२ ॥

तथा सामायिके स्वीकृतवन्तो ये तेऽपरमपि किं कुर्युरित्याह—

शीतोष्णदंशमशकपरीषहमुपसर्गमपि च मौनधराः।
सामायिकं प्रतिपन्ना अधिकुर्वीरन्नचलयोगाः ॥१३॥

अधिकुर्वीरन् सहेरन्नित्यर्थः। के ते? सामायिकं प्रतिपन्नाः सामायिकं स्वीकृतवन्तः। किं विशिष्टाः सन्तः? अचलयोगाः स्थिरसमाधयः प्रतिज्ञातानुष्ठानापरित्यागिनो वा। तथा मौनधरास्तदपीडायां सत्यामपि दीनादिवचनानुच्चारकाः। कमधिकुर्वीरन्नित्याह—शीतेत्यादि शीतोष्ण

चापि उपविष्टकायोत्सर्गमपि च स्थानमूर्ध्वकायोत्सर्गं उपवेशनं वा सामान्येनोपविष्टवस्थानमपि समय जानन्ति ॥ ८ ॥

एव विधे समये भवत् यत्सामायिक पंचप्रकारपापात् साकल्येन व्यावृत्तिस्वरूप तस्योत्तरोत्तरा वृद्धि कर्तव्येत्याहः—

**एकान्ते सामयिकं निर्व्याक्षेपे वनेषु वास्तुषु च ।**
**चैत्यालयेषु वापि च परिचेतव्यं प्रसन्नधिया ॥ ९ ॥**

परिचेतव्य वृद्धि नेतव्य । किं तत् ? सामायिक । क्व ? एकान्ते स्त्रीपशुपाण्डुविवर्जिते प्रदेशे । कथभूते ? निर्व्याक्षेपे चित्तव्याकुलतारहिते शीतवातदेशमशकादिवाधावर्जित इत्यर्थ इत्थभूते एकान्ते । क्व ? वनेषु अटवीषु, वास्तुषु च गृहेषु, चैत्यालयेषु च अपिशब्दाद्गिरिगव्हरादिपरिग्रह । केन चेतव्य ? प्रसन्नधिया प्रसन्ना अविक्षिप्ता धीर्यस्यात्मनस्तेन अथवा प्रसन्नासौ धीश्च तया कृत्वा आत्मना परिचेतव्यमिति ॥९॥

इत्थभूतेषु स्थानेषु कथ तत्परिचेतव्यमित्याह —

**व्यापारवैमनस्याद्विनिवृत्त्यामन्तरात्मविनिवृत्त्या ॥**
**सामयिकं वध्नीयादुपावासे चैकभुक्ते वा ॥ १० ॥**

वध्नीयादनुतिष्ठेत् । किं तत् ? सामयिक । कस्या ? विनिवृत्त्या । कस्मात् ? व्यापारवैमनस्यात् व्यापार कायादिचेष्टा वैमनस्य मनोव्यग्रता चित्तकालुष्य वा तस्माद्विनिवृत्यामपि सत्या अन्तरात्मविनिवृत्या कृत्वा तद्वध्नीयात् अन्तरात्मनो विकल्पश्च विशेषेण विनिवृत्या । कस्मिन् सति तस्या तद्वध्नीयात् ? उपवासे चैकभुक्ते वा ॥ १० ॥

इत्थ भूतं तत्किं कदाचित्परिचेतव्यमन्यथा चेत्यत्राह —

**सामयिकं प्रतिदिवसं यथावदप्यनलसेन चेतव्यं ।**
**व्रतपञ्चकपरिपूरणकारणमवधानयुक्तेन ॥ ११ ॥**

चेतव्यं वृद्धिं नेतव्यं । किं ? सामायिकं । कदा ? प्रतिदिवसमपि न पुनः कदाचित् पर्वदिवसे एव । कथं ? यथावदपि प्रतिपादितस्वरूपानतिक्रमेणैव । कथंभूतेन ? अनलसेनाऽऽलस्यरहितेन उद्यतेनेत्यर्थः । तथाऽवधानयुक्तेनैकाग्रचेतसा । कुतस्तदित्थं परिचेतव्यं ? व्रतपञ्चकपरिपूरणकारणं यत अव्रतानां हि सविरत्यागीनां पञ्चकं तस्य परिपूर्णं परिपूरणत्वं महाव्रतरूपत्वं तस्य कारणं यथोक्तसामायिकानुष्ठानकाले हि अणुव्रतान्यपि महाव्रतत्वं प्रतिपद्यन्तेऽतस्तत्कारणं ॥ ११ ॥

एतदेव समर्थयमानः प्राह—

सामयिके सारम्भाः परिग्रहा नैव सन्ति सर्वेऽपि ।
चेलोपसृष्टमुनिरिव गृही तदा याति यतिभावं ॥ १२॥

सामयिके सामायिकावस्थायां । नैव सन्ति न विद्यन्ते । के ? परिग्रहा सङ्गा । कथंभूता ? सारम्भा कृष्याद्यारम्भसहिता । कति ? सर्वेऽपि “बाह्याभ्यन्तराश्चेतनेतरादिरूपा” वा । यत एव ततो याति प्रतिपद्यते । कं ? यतिभावं यतित्वं । कोऽसौ ? गृही श्रावकः । कदा ? सामायिकावस्थायां । कइव ? चेलोपसृष्टमुनिरिव चेलेन वस्त्रेण उपसृष्ट उपसर्गवशाद्वेष्टित स चासौ मुनिश्च स इव तद्वत् ॥ १२ ॥

तथा सामायिके स्वीकृतवन्तो ये तेऽपरमपि किं कुर्वन्त्वित्याहः—

शीतोष्णदंशमशकपरीषहमुपसर्गमपि च मौनधराः ।
सामायिकं प्रतिपन्ना अधिकुर्वीरन्नचलयोगाः ॥१३॥

अधिकुर्वीरन् सहेरन्नित्यर्थः । के ते ? सामायिकं प्रतिपन्ना सामायिकं स्वीकृतवन्त । किं विशिष्टाः सन्त ? अचलयोगा स्थिरसमाधय प्रतिज्ञातानुष्ठानापरित्यागिनो वा । तथा मौनधरास्तत्पीडायां सत्यामपि दीनादिवचनमनुच्चारका । किमधिकुर्वीरन्नित्याह—शीतेत्यादि शीतोष्ण

दंशमशकाना पीडाकारणा तत्परिसमन्तात् सहन तत्परीषहस्त, न केवलं तमेव अपि तु उपसर्गमपि च देवमनुष्यतिर्यक्कृत ॥ १३ ॥

त चाधिकुर्वाणा सामायिके स्थिता एव विधं संसारमोक्षयो स्वरूप चिन्तयेयुरित्याह,—

**अशरणमशुभमनित्यं दुःखमनात्मानमावसामि भवम् ।**
**मोक्षस्तद्विपरीतात्मेति ध्यायन्तु सामयिके ॥ १४ ॥**

तथा सामायिके स्थिता ध्यायन्तु । क ? भव स्वोपात्तकर्मवशाच्चतुर्गतिपर्यटन । कथभूत ? अशरण न विद्यते शरणमपायपरिरक्षक यत्र । अशुभमशुभकारणप्रभवत्वादशुभकार्यकारित्वाच्चाशुभ । तथाऽनित्य चतसृष्वपि गतिषु पर्यटनस्य नियतकालतयाऽनित्यत्वादनित्य । तथा दु खहेतुत्वाद्दु ख । तथानात्मानमात्मस्वरूप न भवति । एवं विधं भवमावसामि एव विधे तिष्ठामीत्यर्थः । यद्येव विध' ससारस्तर्हि मोक्ष. कीदृश इत्याह—मोक्षस्तद्विपरीतात्मा तस्मादुक्तभवस्वरूपाद्विपरीतस्वरूपत' शरणशुभादि स्वरूप., इत्येव ध्यायन्तु चिन्तयन्तु सामायिके स्थिता. ॥ १४ ॥

साम्प्रत सामायिकस्यातीचारानाह,—

**वाक्कायमानसाना दुःप्रणिधानान्यनादरस्मरणे ।**
**सामयिकस्यातिगमा व्यज्यन्ते पञ्च भावेन ॥ १५ ॥**

व्यज्यन्ते कथ्यन्ते । के ते ? अतिगमा अतिचारा । कस्य ? सामयिकस्य । कति ? पच । कथ ? भावेन परमार्थेन । तथा हि । वाक्कायमानसाना दुष्प्रणिधानमित्येतानि त्रीणि । अनादरोऽनुत्साह । अस्मरणमनैकाग्रम् ॥ १५ ॥

अथेदानीं प्रोषधोपवासलक्षणं शिक्षाव्रत व्याचक्षाण प्राह —

पर्वण्यष्टम्यां च ज्ञातव्यः प्रोषधोपवासस्तु ।
चतुरभ्यवहार्य्याणां प्रत्याख्यानं सदेच्छाभि ॥ १६ ॥

प्रोषधोपवास पुनर्ज्ञातव्य । कदा पर्वणि चतुर्दश्यां न केवलं पर्वणि अष्टम्यां च । किं पुन प्रोषधोपवासशब्दाभिधेयं ? प्रत्याख्यान । केषां ? चतुरभ्यवहार्याणां चत्वारि अशनपानखाद्यलेह्यलक्षणानि तानि चाभ्यवहार्याणि च भक्षणीयानि तेषां । किं कस्यं सदैवाष्टम्यां चतुर्दश्यां च तेषां प्रत्याख्यानमित्याह—सदा सर्वकालं । काभि इच्छाभिर्व्रतविधानवाञ्छाभिस्तयां प्रत्याख्यानं न पुनर्व्यवहारकृतचरणप्रादिभि ॥१६॥

उपवासदिने चोपोषितेन किं कर्तव्यमित्याह —

पञ्चानां पापानामलंक्रियारम्भगन्धपुष्पाणाम् ।
स्नानाञ्जननस्यानामुपवासे परिहृतिं कुर्यात् ॥ १७ ॥

उपवासदिने परिहृतिं परित्यागं कुर्यात् । केषां ? पंचानां हिंसादीनां । तथा अलंक्रियारंभगंधपुष्पाणां अलंक्रिया मण्डनं आरंभो वाणिज्यादिव्यापार गन्धपुष्पाणामित्युपलक्षणं रागहेतून् ? गीतनृत्यादीनां । तथा स्नानंच अञ्जनं च वा नस्यम् तेषाम् ॥ १७ ॥

एतेषां परिहारं कृत्वा किं तद्दिनेऽनुष्ठातव्येत्याह —

धर्मामृतं सतृष्णः श्रवणाभ्यां पिबतु पाययेत्-
द्वान्यान् । ज्ञानध्यानपरो वा भवतूपवसन्नत-
न्द्रालुः ॥ १८ ॥

उपवसन्नुपवासं कुर्वन् धर्मामृतं पिबतु धर्म एवामृतं सकलप्राणिनामाप्यायकत्वात् तत् पिबतु । काभ्यां ? श्रवणाभ्यां । कथंभूत ? सतृष्णः साभिलाष पिबन् न पुनरुपरोधादिवशात् । पाययेद्वान्यान् स्वयमेवावगततधर्मस्वरूपस्तु अन्यांचो धर्मामृतं पिबन् अन्यानविदितस्वरूपान् पाययेत् तत् ज्ञानध्यानपरो भवतु ज्ञानपरो वा द्वादशानुप्रेक्षाद्युपयोगनिष्ठ ॥

अध्रुवाशरणे चैव भव एकत्वमेव च।
अन्यत्वमशुचित्वं च तथैवास्रवसंवरौ ॥ १ ॥
निर्जराच तथा. लोक वोधिदुर्लभधर्मता।
द्वादशैता अनुप्रेक्षा भापिता जिनपुंगवै. ॥ २ ॥

आज्ञापायविपाकसस्थानविचयलक्षणधर्मध्यानपर तन्निष्ट भवतु। किं विशिष्ट ? अतन्द्रालु निद्रालस्यरहित ॥ १८ ॥

अधुना प्रोपधोपवासस्तल्लक्षण कुर्वन्नाह —

**चतुराहारविसर्जनमुपवासः प्रोपधः सकृद्भुक्तिः।**
**स प्रोपधोपवासो यदुपोष्यारम्भमाचरति ॥ १९ ॥**

चत्वारश्च ते आहाराश्चाशनपानखाद्यलेह्यलक्षणा, अशन हि भक्तमुद्गादि, पान हि पेयमथितादि, खाद्य मोदकादि, लेह्य रब्रादि तेपा विसर्जन परित्यजनमुपवासो विधीयते। प्रोपध पुन सकृद्भुक्तिधारणकदिने एकभक्तविधान यत्पुनरपोष्य उपवास कृत्वा पारणकदिने आरंभ सकृद्भुक्तिमाचरत्यनुतिष्टति स प्रोपधोपपासोऽभिधीयते इति ॥ १९ ॥

अथ केऽस्यातीचारा इत्याह —

**ग्रहणविसर्गास्तरणान्यदृष्टमृष्टान्यनादरास्मरणे।**
**यत्प्रोपधोपवासव्यतिलङ्घनपञ्चकं तदिदम् ॥ २० ॥**

प्रोपधोपवासस्य व्यतिलंघनपचकमतिचारपचक। तदिद पूर्वार्धप्रतिपादितप्रकार। तथा हि। ग्रहणविसर्गास्तरणानि त्रीणि। कथ भूतानि ? अदृष्टमृष्टानि दृष्ट दर्शन जन्तव सन्ति न सन्तीति वा चक्षुपावलोकन मृष्ट मृदुनोपकरणेन प्रमार्जन तद्द्वौ न विद्येते येपु ग्रहणादिपु तानि तथोक्तानि। तत्र बुभुक्षापीडितस्यादृष्टमृष्टस्यार्हदादिपूजोपकरणस्यात्मपरिधानाद्यर्थस्य च ग्रहण भवति। तथा अदृष्टमृष्टाया भूमौ मूत्रपुरीपादेरुत्सर्गो भवति। तथा अदृष्टमृष्टे प्रदेशे आस्तरण सस्तरोपक्रमो भवतीत्ये-

यानि त्रीणि। अनादरास्मरणे च द्वे। तथा भावस्यकादौ हि मुमुक्षा पीडितस्यान्यादरोऽनेकप्रमादस्मरणमस्मरणं भवति ॥ २० ॥

इदानीं वैयावृत्त्यलक्षणशिक्षाव्रतस्य स्वरूपं प्ररूपयन्नाह;—

दानं वैयावृत्त्यं धर्माय तपोधनाय गुणनिधये।
अनपेक्षितोपचारोपक्रियमगृहाय विभवेन ॥ २१ ॥

भोजनादिदानमपि वैयावृत्त्यमुच्यते। कस्मै दानं? तपोधनाय तप एव धनं यस्य तस्मै। किंविशिष्टाय? गुणनिधये गुणानां सम्यग्दर्शनादीनां निधिराश्रयस्तस्मै। तथाऽगृहाय भावद्रव्यागाररहिताय। किमर्थं? धर्माय धर्मनिमित्तं, । किं विशिष्टं तद्दानं? अनपेक्षितोपचारोपक्रियं उपचार प्रतिदाने उपक्रिया मंत्रतंत्रादिना प्रत्युपकरणं ते न अपेक्षिते येन कर्म। तथाम? विभवेन विविद्रव्यादिसम्पदा ॥ २१ ॥

न केवलं दानमेव वैयावृत्त्यमुच्यतेऽपितु —

व्यापत्तिव्यपनोदः पदयोः संवाहनं च गुणरागात्।
वैयावृत्त्यं यावानुपग्रहोऽन्योऽपि संयमिनाम् ॥ २२ ॥

व्यापत्तयो विविधाव्याध्यादिजनिता आपदस्तासां व्यपनोदो विशेषेणापनोद स्फेटनं यत्तद्वैयावृत्त्यमेव। तथा पादयो संवाहनं पादयोर्मर्दनं। कस्मात्? गुणरागात् भक्तिवशादित्यर्थः —न पुनर्व्यवहारात् दृष्टफलापेक्षणाद्वा। न केवलमेतावदेव वैयावृत्त्यं किन्तु अन्योऽपि संयमिनां देशसकलव्रतानां सम्बन्धी यावान् यत्परिमाण उपग्रह उपकार स सर्वो वैयावृत्त्यमेवोच्यते ॥ २२ ॥

अथ किं दानमुच्यत इत्यत आह —

नवपुण्यैः प्रतिपत्तिः सप्तगुणसमाहितेन शुद्धेन।
अपसूनारम्भाणामार्याणामिष्यते दानम् ॥ २३ ॥

दानमिष्यते। कासौ? प्रतिपत्ति गौरव आदरस्वरूपा। केषा? आर्याणा सद्दर्शनादिगुणोपेतमुनीना। किंविशिष्टाना? अपसूनारम्भाणां सूना पचजीवघातस्थानानि। तदुक्तम्

**खंडनी पेषणी चुल्ली उदकुम्भ' प्रमार्जनी।**
**पचसूना गृहस्थस्य तेन मोक्षं न गच्छति॥ १२॥**

खंडनी उलखल, पेषणी घरट्ट, चुल्ली—चुल्लक', उदकुम'—उदकघट', प्रमार्जनी—बोहारिका। सूनाश्चारभाश्च कृष्यादयस्तेऽपगता येषा तेषा। केन प्रतिपत्ति कर्तव्या? सप्तगुणसमाहितेन.

**श्रद्धा तुष्टिर्भक्तिर्विज्ञानमलुब्धता क्षमा सत्यं।**
**यस्यैते सप्तगुणास्त दातार प्रशसन्ति॥**

इत्येतै' सप्तभिर्गुणै समाहितेन तु दात्रा दान दातव्यं। कैः कृत्वा? नव पुण्यैः—

**पडिगहमुच्चट्ठाणं पादोदयमच्चण च पणमं च।**
**मणवपणकायसुद्धी एसणसुद्धी य नवविहं पुण्णं॥**

एतैर्नवभि पुण्यै पुण्योपार्जनहेतुभि॥ २३॥

इत्थ दीयमानस्य फल दर्शयन्नाह,—

**गृहकर्मणापि निचितं कर्म विमार्ष्टि खलु गृहविमुक्तानाम्। अतिथीनां प्रतिपूजा रुधिरमलं धावते वारि॥ २४॥**

विमार्ष्टि स्फेटयति। खलु स्फुट। किं तत्? कर्म पापरूप। कथभूतं? निचितमपि उपार्जितमपि पुष्टमपि वा। केन? गृहकर्मणा सावद्यव्यापारेण। कोऽसौ कर्तृ? प्रतिपूजा दान। केषामपि? अतिथीना न विद्यते तिथिर्येषा तेषा। किं विशिष्टाना गृहविमुक्तानां गृहरहिताना अस्यैवार्थस्य समर्थनार्थं दृष्टान्तमाह—रुधिरमल धावते वारि अलशब्दो

यथार्थे अपमार्ष्टि रुधिरं यथा मलिनमपवित्रं च वारि कर्तुं निर्मलं पवित्रं च मार्ष्टि प्रक्षालयति तथा दानं पापं निमार्ष्टि ॥ २४ ॥

साम्प्रतं नवप्रकारेषु प्रतिग्रहादिषु क्रियमाणेषु कस्मात् किं फलं सम्पद्यत इत्याह —

उच्चैर्गोत्रं प्रणतेर्भोगो दानादुपासनात्पूजा ।
भक्तेः सुन्दररूपं स्तवनात्कीर्तिस्तपोनिधिषु ॥ २५ ॥

तपोनिधिषु यतिषु । प्रणतेः प्रणामकरणादुच्चैर्गोत्रं भवति । तथा दानादवश्यंदातव्यलक्षणाद्भोगो भवति । उपासनात् प्रतिग्रहणादिरूपात् सर्वत्र पूजा भवति । भक्तेर्गुणानुरागजनितान्तःश्रद्धाविशेषलक्षणायाः सुन्दररूपं भवति । स्तवनात् श्रुतजलधीत्यादिस्तुतिविधानात् सर्वत्र कीर्तिर्भवति ॥ २५ ॥

ननु मुनीनामीषद्दानं कथं विशिष्टं फलं सम्पादयतीत्याशङ्क्याऽपनोदार्थमाह —

क्षितिगतमिव वटबीजं पात्रगतं दानमल्पमपि काले ।
फलतिच्छायाविभवं बहुफलमिष्टं शरीरभृताम् ॥ २६ ॥

अल्पमपि दानमुचितकाले पात्रगतं सत्पात्रे दत्तं शरीरभृतां संसारिणामिष्टं फलं बहुमनेकप्रकारसुन्दररूपं भोगोपभोगादिलक्षणं फलति । कथंभूतं ? छायाविभवं छाया माहात्म्यं विभवः सम्पत् तौ विद्येते यत्र । अस्यैवार्थस्य समर्थनार्थं क्षितीत्यादिदृष्टान्तमाह—क्षितिगतं सुक्षेत्रे निक्षिप्तं यथा अल्पमपि वटबीजं बहुफलं फलति । कथं ? छायाविभवं छाया आतपनिरोधिनी तस्या विभवं प्राचुर्यं यथा भवत्येवं फलति ॥ २६ ॥

तच्चैवंविधफलसम्पादकं दानं चतुर्भेदं भवतीत्याह —

आहारौषधयोरप्युपकरणावासयोश्च दानेन ।
वैयावृत्यं ब्रुवते चतुरात्मत्वेन चतुरस्राः ॥ २७ ॥

दानमिष्यते । कासो ? प्रतिपत्ति गौरव आदरस्वरूपा । केषा ? आर्याणा सद्दर्शनादिगुणोपेतमुनीना । किंविशिष्टाना ? अपसूनारम्भाणा सूना पचजीवघातस्थानानि । तदुक्तम्

खडनी पेषणी चुल्ली उदकुम्भ' प्रमार्जनी ।
पचसूना गृहस्थस्य तेन मोक्ष न गच्छति ॥ १२ ॥

खडनी उदूखल, पेषणी घरट्ट, चुल्ली—चुल्लक , उदकुभ —उदकघट., प्रमार्जनी—बोहारिका । सूनाश्चारंभाश्च कृष्यादयस्तेऽपगता येषा तेषा । केन प्रतिपत्ति कर्तव्या ? सप्तगुणसमाहितेन

श्रद्धा तुष्टिर्भक्तिर्विज्ञानमलुब्धता क्षमा सत्यं ।
यस्यैते सप्तगुणास्त दातार प्रशसन्ति ॥

इत्येतै सप्तभिर्गुणै समाहितेन तु दात्रा दान दातव्य। कै. कृत्वा ? नव पुण्यै —

पडिगहमुच्चट्ठाणं पादोदयमच्चणं च पणम च ।
मणवयणकायसुद्धी एसणसुद्धी य नवविहं पुण्ण ॥

एतैर्नवभि पुण्यै पुण्योपार्जनहेतुभि ॥ २३ ॥

इत्थ दीयमानस्य फल दर्शयन्नाह,—

**गृहकर्मणापि निचितं कर्म विमार्ष्टि खलु गृहविमुक्तानाम् । अतिथीनां प्रतिपूजा रुधिरमलं धावते वारि ॥ २४ ॥**

विमार्ष्टि स्फेटयति । खलु स्फुट । किं तत् ? कर्म पापरूप । कथंभूतं ? निचितमपि उपार्जितमपि पुष्टमपि वा । केन ? गृहकर्मणा सावद्यव्यापारेण । कोऽसौ कर्तृ ? प्रतिपूजा दान । केषामपि ? अतिथीना न विद्यते तिथिर्येषा तेषा । किं विशिष्टाना गृहविमुक्ताना गृहरहिताना अस्यैवार्थस्य समर्थनार्थं दृष्टान्तमाह—रुधिरमल धावते वारि अलशब्दो

पृष्ट—तात ! तव शीलस्य लेशोऽपि कपिले नास्ति तत किमयं तव पुत्रो भवति न वेति सत्यं मे कथय। सत्यसेन कथितं पुत्रि ! मनीयचेटि धपुत्र इति। एतदाकर्ण्य तदुपरि विरक्ता सा हठादयं मामभिगमिष्यतीति मत्वा सिंहनन्दिताग्रमहादेव्याः शरणं प्रविष्टा तया च सा पुत्री कृता। एवमेकदा श्रीषेणराजेन परमभक्त्या विधिपूर्वकमर्ककीर्त्यामितगतिचारणमुनिभ्यां दानं दत्तम्। तत्फलेन राज्ञा सह भोगभूमावुत्पन्ना। तदनुमोदनात् सत्यभामापि तत्रैवोत्पन्ना। स राजा श्रीषेणो दानप्रथमकारणात् पारंपर्येण शान्तिनाथतीर्थकरो जात। आहारदानफलम्।

औषधदाने वृषभसेनाया दृष्टान्तः। अस्याः कथा—

जनपददेशे कावेरीपत्तने राजोग्रसेन श्रेष्ठी धनपति भार्या धनश्री पुत्री वृषभसेना तस्या धात्री रूपवती नाम्ना। एकदा वृषभसेनास्नानजलगर्तायां रोगगृहीतं कुक्कुरं पतितमुत्थितं ऽस्थितं रोगरहितमालोक्य चिन्तितं धात्र्या—पुत्रीस्नानजलमेवात्ररोग्यत्वे कारणम्। ततस्तया धात्र्या निजजनन्या द्वादशवार्षिकाक्षिरोगगृहीताया कथितं तया लोचने तेन जलेन परीक्षार्थमेकदिने धौतं दृष्टी च शोभने जाते तत सर्वरोगापनयने सा धात्री प्रसिद्धा तत्र नगरे संजाता। एकदोग्रसेनेन रणपिंगलमंत्री बहुसैन्योपेतो मेघपिंगलोपरि प्रेषित। स तं देशं प्रविष्टो विषोदकसेवनात् ज्वरेण गृहीत। स च धात्र्युपायात रूपवत्या च तेन जलेन निरोगीकृत। उग्रसेनोऽपि कोपात्तत्र गत तथा ज्वरितो व्याघुट्यायातो रणपिंगलात् जलवृत्तान्तमाकर्ण्य तज्जलं याचितवान्। ततो मंत्री उक्तो धनश्रिया भो श्रेष्ठिन्! कथं नरपते शिरसि पुत्रीस्नानजलं क्षिप्यते ? धनपतिनोक्तं यदि पृच्छति राजा जलस्वभावं तदा सत्यं कथ्यते न दोषः। एवं भणिते रूपवत्या तेन जलेन नीरोगीकृत उग्रसेनः ततो नीरोगेण राज्ञा पृष्टा रूपवती जलस्य माहात्म्यम्। तया च सत्यमेव कथितं। ततो

राजा व्याहृत श्रेष्ठी, मन्त्र नीत राज समीपमायात । राजा च गौरवं कृत्वा वृषभसेना परिणेतु न याचित । तत श्रेष्ठिना भणित देव' यद्यष्टाह्निका पूजा जिनप्रतिमानां करोषि तथा पञ्जरस्थान् पक्षिगणान् मुञ्चसि तथा गुप्तिषु सर्वमनुष्यांश्च मुञ्चसि तदा ददामि । उग्रसेनेन च तत् सर्व कृत्वा परिणीता वृषभसेना पट्टराज्ञी च कृता । अतिवल्लभया तया च सह विमुक्तान्यकार्य क्रीडां करोति । एतस्मिन् प्रस्तावे यो वाराणस्या पृथिवीचन्द्रो नाम राजा धृत आस्ते सोऽतिप्रचण्डतया तद्विवाहकालेऽपि न मुक्त । ततस्तस्य या राज्ञी नारायणदत्ता तया मन्त्रिभि सह मन्त्रयित्वा पृथिवीचन्द्रमोचनार्थं वाराणस्यां सर्वत्रावारितसत्कारा वृषभसेनाराज्ञी नाम्ना कारिता, तेषु भोजन कृत्वा कावेरीपत्तने ये गतास्तेभ्यो ब्राह्मणादिभ्यस्त वृत्तान्तमाकर्ण्य रुष्टया रूपवत्या भणिता वृषभसेने त्वं मामपृच्छन्ती वाराणस्या कथं सत्कारान् कारयसि । तया भणितमहं न कारयामि किन्तु मम नाम्ना केनचित्कारणेन केनापि कारिता तेषा शुद्धिं कुरु त्वमिति चरपुरुषैः कृत्वा यथार्थं ज्ञात्वा तया वृषभसेनाया सर्व कथितम् । तया च राजानं विज्ञाप्य मोचित पृथ्वीचन्द्र । तेन च चित्रफलके वृषभसेनोग्रसेनयो रूपे कारिते । तयोरधो राजरूप सप्रणाम कारितम् । स फलकस्तयोर्दर्शित भणिता च वृषभसेना राज्ञी—देवि ! त्वं मम मातासि त्वत्प्रसादादिदं जन्म सफलं मे जात । तत उग्रसेन सन्मान दत्वा भणितवान् त्वया मेघपिङ्गलस्योपरि गतव्यमित्युक्त्वा स च ताभ्यां वाराणस्यां प्रेषित । मेघपिङ्गलोऽप्येतदाकर्ण्य ममायं पृथ्वीचन्द्रो मर्मभेदीति पर्यालोच्यागत्य चोग्रसेनस्यातिप्रसादित सामन्तो जात । उग्रसेनेन चास्थानस्थितस्य यन्मे प्राभृतमागच्छति तस्यार्धं मेघपिङ्गलस्य दास्यामि अर्धं च वृषभसेनाया इति व्यवस्था कृता । एवमेकदा रत्नकम्बलद्वयमागतमेकैकं सनामाङ्कं कृत्वा तयोर्दत्त । एकदा मेघपिङ्गलस्य

राज्ञी विजयास्या मेघपिङ्गलकम्बलं प्राप्य प्रयोजनेन रूपवतीपार्श्वे गता। तत्र कम्बलपरिवर्तो जातः। एकदा वृषभसेनाकम्बलं प्राप्य मेघपिङ्गलः सेवायामुग्रसेनसभायामागतः राजा च तमालोक्यातिकोपाद्रक्ताक्षो बभूव। मेघपिङ्गलश्च तं तथाभूतमालोक्य ममोपरि कुपितोऽयं राजेति ज्ञात्वा दूरं नष्टः। वृषभसेना च रुष्टेनोग्रसेनेन मारणार्थं समुद्रजले निक्षिप्ता। तया च प्रतिज्ञा गृहीता यदि एतस्मादुपसर्गादुद्धरिष्यामि तदा तपः करिष्यामीति। ततो व्रतमाहात्म्याज्जलदेवतया तस्याः सिंहासनादिप्रातिहार्यं कृतम्। तच्छ्रुत्वा पश्चात्तापं कृत्वा राजा तामानेतुं गतः। आगच्छता वनमध्ये गुणधरनामाऽवधिज्ञानी मुनिर्दृष्टः। स च वृषभसेनया प्रणम्य निजपूर्वभवचेष्टितं पृष्टः। कथितं च भगवता यथा—पूर्वभवे त्वमत्रैव ब्राह्मणपुत्री नागश्री नामा जातासि। राजकीयदेवकुले सम्मार्जनं करोषि। तत्र देवकुले एकदाऽपराह्णे प्राकाराभ्यन्तरे निर्वातगर्तायां मुनिदत्तनामा मुनिः पर्यङ्ककायोत्सर्गेण स्थितः। त्वया च रुष्टया भणितः कटकाद्राजा समायातोऽत्रागमिष्यतीत्युत्तिष्ठोत्तिष्ठ सम्मार्जनं करोमि त्वमेति श्रुत्वापायस्तत्र मुनिः कायोत्सर्गं विधाय मौनेन स्थितः। ततस्त्वया कचवारेण पूरयित्वोपरि सम्मार्जनं कृतम्। प्रभाते तत्रागतेन राज्ञा तत्प्रदेशे क्रीडता उच्छ्वसितनिःश्वसितप्रदेशं दृष्ट्वा उत्खन्य निःसारितश्च स मुनिः। ततस्त्वयात्मनिन्दां कृत्वा धर्मे रुचिः कृता। परमादरेण च तस्य मुनेस्त्वया तत्पीडोपशमनार्थं विशिष्टमौषधदानं वैयावृत्त्यं च कृतम्। ततो निदानेन मृत्वेह धनपतिधनश्रियोः पुत्री वृषभसेना नाम जातासि। औषधदानफलात् सर्वौषधर्द्धिर्जातम्। कचवारपूरणात् कलङ्किता च। इति श्रुत्वात्मानं मोचयित्वा वृषभसेना तत्समीपे आर्यिका जाता। औषधदानस्य फलम्।

**श्रुतदाने कौण्डेशो दृष्टान्तः। अस्य कथा—**

कुरुमरिग्रामे गोपालो गोविन्दनामा। तेन च कोटरादुद्धृत्य चिरन्तनपुस्तकं प्रपूज्य भक्त्या पद्मनन्दिमुनये दत्तम्। तेन पुस्तकेन कपटम्या

1 कच्छरी इति ग कुच्छर च।

पूर्वभट्टारका केचित् किल पूजा कृत्वा कारयित्वा च व्याख्यान कृतवन्त कोटरे धृत्वा च गतवन्तश्च। गोविन्देन च बाल्यात्प्रभृति त दृष्ट्वा नित्यमेव पूजा कृता वृक्षकोटरस्यापि। एष स गोविन्दो निदानेन मृत्वा तत्रैव ग्रामकूटस्य पुत्रोऽभूत्। तमेव पद्मनन्दिमुनिमालोक्य जातिस्मरो जात। तपो गृहीत्वा कोण्डेशनामा महामुनि. श्रुतधरोऽभूत्। इति श्रुतदानस्य फलम्।

वसतिदाने सूकरो दृष्टान्त। अस्य कथा—

मालवदेशे घटग्रामे कुम्भकारो देविलनामा नापितश्च धमिल्लनामा। ताभ्या पथिकजनाना वसतिनिमित्त देवकुल कारितम्। एकदा देविलेन मुनये तत्र प्रथम वसतिर्दत्ता धमिल्लेन च पश्चात् परिव्राजकस्तत्रानीय धृत.। ताभ्या च धमिल्लपरिव्राजकाभ्या नि सारित स मुनिर्वृक्षमूले रात्रौ दशमशकशीतादिक सहमान स्थित प्रभाते देविलधमिल्लो तत्कारणेन परस्पर युद्ध कृत्वा मृत्वा विन्ध्ये क्रमेण सूकरव्याघ्रौ प्रौढौ जातौ। यत्र च गुहाया स सूकरस्तिष्ठति तत्रैव च गुहायामेकदा समाधिगुप्तत्रिगुप्तमुनी आगत्य स्थितौ तौ च दृष्ट्वा जातिस्मरो भूत्वा देविलचरसूकरो धर्ममाकर्ण्य व्रत गृहीतवान्। तत्प्रस्तावे मनुष्यगन्धमाघ्राय मुनिभक्षणार्थं स व्याघ्रोऽपि तत्रायात। सूकरश्च तयो रक्षानिमित्त गुहाद्वारे स्थित। तत्रापि तौ परस्पर युद्ध्वा मृतौ। सूकरो मुनिरक्षणाभिप्रायेण शुभाभिसन्धित्वात् मृत्वा सौधर्मे महर्द्धिको देवो जात। व्याघ्रस्तु मुनिभक्षणाभिप्रायेणातिरौद्राभिप्रायत्वान्मृत्वा नरक गत। वसतिदानस्य फलम्॥ २८॥

यथा वैयावृत्य विदधता चतुर्विध दान दातव्य तथा पूजाविधानमपि कर्तव्यमित्याह —

१ वृक्षस्य इति ग पूजा कृत्वा वृक्षकोटरे स्थापित इति ख २ धम्मिल धम्मिल्ल इति ग

देवाधिदेवचरणे परिचरणं सर्वदुःखनिर्हरणम् ।
कामदुहि कामदाहिनि परिचिनुयादादृतो नित्यम् ॥ २९ ॥

आदृतः आदरयुक्तो नित्यं परिचिनुयात् पुष्टं कुर्यात् । किं ? परिचरणं पूजा । किंविशिष्टं ? सर्वदुःखनिर्हरणं निःशेषदुःखविनाशकं । क्व ? देवाधिदेवचरणे देवानामिन्द्रादीनामधिको वन्द्यो देवाधिदेवस्तस्य चरणः पादस्तस्मिन् । कथंभूते ? कामदुहि वाञ्छितप्रदे । तथा कामदाहिनि कामविध्वंसके ॥ २९ ॥

पूजामाहात्म्यं किं क्वापि केन प्रकटितमित्याशङ्क्याह —

अर्हच्चरणसपर्यामहानुभावं महात्मनामवदत् ।
भेकः प्रमोदमत्तः कुसुमेनैकेन राजगृहे ॥ ३० ॥

भेको मण्डूकः प्रमोदमत्तो विशिष्टधर्मानुरागेण हृष्टः अवदत् कथितवान् । किमित्याह—अर्हदित्यादि अर्हतश्चरणौ अर्हच्चरणौ तयोः सपर्या पूजा तस्या महानुभावं विशिष्टं माहात्म्यं । केषामवदत् ? महात्मनां भव्यजीवानां । केन कृत्वा ? कुसुमेनैकेन । क्व ? राजगृहे ।

अस्य कथा—

मगधदेशे राजगृहनगरे राजा श्रेणिकः श्रेष्ठी नागदत्तः श्रेष्ठिनी भवदत्ता । स नागदत्तश्रेष्ठी सर्वदा मायायुक्तत्वान्मृत्वा निजप्राङ्गणवाप्यां भेको जातः । तत्रागतामेकदा भवदत्ताश्रेष्ठिनीमालोक्य जातिस्मरो भूत्वा तस्याः समीपे आगत्य उपर्युत्प्लुत्य चटितः । तया च पुनः पुनर्निर्घाटितो ऽप्यति, पुनरागत्य चटति च ततस्तया कोऽप्ययं मदीयो इष्टो भविष्यतीति सम्प्रधार्यावधिज्ञानी सुव्रतमुनिः पृष्टः । तेन च तद्वृत्तान्ते कथिते गृहे नीत्वा परमगौरवेणासौ धृतः । श्रेणिकमहाराजश्चैकदा वर्धमानस्वामिनं वैभारपर्वते समागतमाकर्ण्य आनन्दभेरीं दापयित्वा महता विभवेन तं वन्दितुं गतः । श्रेष्ठिन्यादौ च गृहजने वन्दनाभक्त्यर्थं गते स भेकः प्राङ्गणवापीकमलं पूजा

